11075CH06

षष्ठः पाठः

# शुकशावकोदन्तः

प्रस्तुत पाठ कविकुलशिरोमणि महाकवि बाणभट्ट की अद्वितीय कथात्मक रचना 'कादम्बरी' के कथामुख भाग का एक अंश है। महाराज शूद्रक के दरबार में एक चाण्डाल-कन्या स्वर्ण-पिञ्जर में बन्द तोते को उपहार स्वरूप प्रस्तुत करती है। विश्राम के क्षणों में वही तोता महाराज को आपबीती सुनाता है कि वह किस प्रकार घनघोर विन्ध्याटवी में स्थित पम्पा सरोवर के तट पर जीर्ण सेमल के वृक्ष के कोटर से वृद्ध शबर के द्वारा निकाल कर फेंके जाने पर भयंकर दुपहरी में जाबालि मुनि के पुत्र हारीत के द्वारा आश्रम में लाया गया। सम्पूर्ण कथा कुतूहलपूर्ण एवं रोचक है।

**अस्ति मध्यदेशालङ्कारभूता मेखलेव भुवो विन्ध्याटवी नाम। तस्यां च पम्पाभिधानं पद्मसरः। तस्य पश्चिमे तीरे महाजीर्णः शाल्मलीवृक्षः। तस्यैवैकस्मिन् कोटरे निवसतः कथमपि पितुरहमेव सूनुरभवम्। ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत्। तातस्तु सुतस्नेहादन्तर्निगृह्य शोकं मत्संवर्धनपर एवाभवत्। परनीडनिपतिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणान् शुककुलावदलितानि च फलशकलानि समाहृत्य मह्यमदात्। मदुपभुक्तशेषमेवाकरोदशनम्।**

**एकदा तु प्रत्यूषसि सहसैव तस्मिन् वने मृगयाकोलाह-लध्वनिरुदचरत्। आकर्ण्य च तमहमुपजातवेपथुरर्भकतया भयविह्वलः पितुः पक्षपुटान्तरमविशम्। अचिराच्च प्रशान्ते तस्मिन् क्षोभितकानने मृगयाकलकले पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य किमिदमिति दिदृक्षुरभिमुखमापतच्छबरसैन्यमद्राक्षम्। मध्ये च तस्य प्रथमे वयसि वर्तमानं शबरसेनापतिमपश्यम्।**

आसीच्च मे मनसि–'अहो मोहप्रायमेतेषां जीवितम्। आहारो मधुमांसादिः, श्रमो मृगया, शास्त्रं शिवारुतं, प्रज्ञा शकुनिज्ञानम्। यस्मिन्नेव कानने निवसन्ति तदेवोत्खातमूलमशेषतः कुर्वन्ति। इति चिन्तयत्येव मयि शबरसेनापतिः स आगत्य तस्यैव तरोरधश्छायायां परिजनोपनीतपल्लवासने समुपाविशत्। आपीतसलिलो भुक्तमृणालिक–श्चोत्थायापगतश्रमः सकलेन सैन्येन सहाभिमतं दिशमयासीत्।

एकतमस्तु जरच्छबरस्तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत। अन्तरिते च सेनापतौ स सुचिरमारुरुक्षुस्तं वनस्पतिमामूलादपश्यत्। उत्क्रान्तमिव तस्मिन् क्षणे तदालोकनभीतानां शुककुलानामसुभिः। किमिव हि दुष्करमकरुणानाम्। यतः स तमयत्नेनैव पादपमारुह्य फलानीव तस्य वनस्पतेः कोटरेभ्यः शुकशावकानग्रहीत्। अपगतासूंश्च कृत्वा क्षितावपातयत्।

तातस्तु तदवलोक्य विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो विक्षिपन् पक्षसंपुटेनाच्छाद्य मां स्नेहपरवशो मद्रक्षणाकुलोऽभवत्। असावपि पापः क्रमेण शाखान्तरैः सञ्चरमाणो मत्कोटरद्वारमागत्य भुजङ्गभीषणं प्रसार्य बाहुं मुहुर्मुहुर्दत्तचञ्चुप्रहारमुत्कूजन्तमाकृष्य तात– मपगतासुमकरोत् मां तु स्वल्पत्वात् कथमपि नालक्षयत्। उपरतं च तमवनितलेऽमुञ्चत्। अहमपि तच्चरणान्तराले प्रवेशितशिरोधरो निभृतमङ्कनिलीनस्तेनैव सह पवनवशसम्पुञ्जितस्य शुष्कपत्रराशेरुपरि पतितमात्मानमपश्यम्। यावच्चासौ तरुशिखरान्नावतरति तावदहं पितरमुपरतमुत्सृज्य नृशंस इव स्नेहरसानभिज्ञो भयेनैव केवल– मभिभूयमानो लुठन्नितस्ततो नातिदूरवर्तिनस्तमालपादपस्य मूलदेशमविशम्।

अजातपक्षतया च मुहुर्मुहुर्मुखेन पततः स्थूलस्थूलं श्वसतो धूलि–धूसरितस्य संसर्पतो मम समभून्मनसि–नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम्। एवमुपरतेऽपि ताते यदहं जिजीविषामि। धिङ्मामकरुणमतिनिष्ठुरमकृतज्ञम्। खलं हि खलु मे हृदयम्। तातेन यत्कृतं सर्वं तदेकपदे मया विस्मृतम्। सर्वथा न कञ्चिन्न खलीकरोति जीवनाशा यदीदृगवस्थमपि मामायासयति जलाभिलाषः। दिवसस्य चेयमतिकष्टा दशा वर्तते। आतपसन्तप्तपांसुला भूमिः।

पिपासावसन्नानि गन्तुमनल्पमपि मे नालमङ्गकानि। अप्रभुरस्म्यात्मनः। सीदति मे हृदयम्। अन्धकारतामुपयाति मे चक्षुः। अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्यैवोपपादयेत्।

इत्येवं चिन्तयत्येव मयि हारीतनामा जाबालमुनितनयः सवयोभिरपरैर्मुनिकुमारकैः सह तेनैव पथा तदेव कमलसरः सिस्ना-सुरुपागमत्। प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च भवन्ति सतां चेतांसि। यतः स तदवस्थमवलोक्य मां सरस्तीरमानाययत्, स्वयं चादाय सलिलबिन्दूनपाययत्। समुपजातप्राणं मां छायायां निधायाकरोत् स्नानविधिम्। अभिषेकावसाने सकलेन मुनिकुमार-कदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनमगच्छत्।

## शब्दार्थाः टिप्पण्यश्च

**मध्यदेशालङ्कारभूता** – मध्यश्चासौ देशश्च मध्यदेशः (कर्मधारय समास) तस्यालङ्कारभूता, (तत्पुरुष) मध्यदेश की शोभा बढ़ाने वाली।

**विन्ध्याटवी** – विन्ध्यस्य अटवी, विन्ध्य पर्वत पर लगा घना जंगल।

**महाजीर्णः** – महान् च असौ जीर्णः च (कर्मधारय) बड़ा पुराना

**निवसतः** – नि + वस् + शतृ षष्ठी ए०व०, रहने वाले

**जायमानस्य** – जन् + कर्मवाच्य + शानच् षष्ठी ए० व०, पैदा होते हुए।

**अगमत्** – गम् धातु लुङ् लकार प्र० पु० ए० व०, गई।

**निगृह्य** – नि + ग्रह् + क्त्वा > ल्यप्, रोककर।

**परनीडनिपतिताभ्यः** – परेषां नीडेभ्यः पतिताभ्यः दूसरों के घोंसलों से गिरी हुई।

**शुककुलावदलितानि** – शुकानां कुलैः अवदलितानि, तत्पुरुष, तोतों के झुण्ड द्वारा कतरे हुए।

**फलशकलानि** – फलानां शकलानि–खण्डानि, तत्पुरुष, फलों के टुकड़े।

**समाहृत्य** – सम् + आ + हृ + क्त्वा > ल्यप्, लाकर।

**उपभुक्तशेषम्** – उप + भुज् + क्त, उपभुक्तात् शेषम्, खाने से बचा हुआ।

**अशनम्** – अश् + ल्युट् > अन, भोजन।

**प्रत्यूषसि** – ऊषसम् प्रति, अरुणोदय से पूर्व।

**मृगया** – आखेटः, शिकार।

**उपजातवेपथुः** – उपजातः वेपथुः यस्य सः बहुव्रीहि, काँपता हुआ।

**अर्भकतया** – शावक होने से, शुकशावक का विशेषण।

**पक्षपुटान्तरम्** – पक्षयोः पुटस्यान्तरम्, तत्पुरुष, पंखों के पुटक के भीतर।

**क्षोभितकानने** – क्षोभितं काननं येन सः तस्मिन्, जंगल को व्याकुल करने वाले

**प्रसार्य** – प्र + सृ + णिच् + क्त्वा > ल्यप्, फैलाकर।

**दिदृक्षुः** – दृश् + सन् + उ, द्रष्टुम् इच्छुः, देखने का इच्छुक।

**शिवारुतम्** – शिवायाः – शृगाल्याः रुतम् शब्दम्, तत्पुरुष, सियारिनों का रोना।

**शकुनिज्ञानम्** – शकुनीनां ज्ञानम्, तत्पुरुष, पक्षिविषयक ज्ञान।

**उत्खातमूलम्** – उत्खातं मूलं यस्य तम् बहुव्रीहि, जिसकी जड़ें उखड़ गई हैं।

**परिजनोपनीतम्** – परिजनैः – भृत्यैः उपनीतम्, तत्पुरुष, सेवकों द्वारा लाए गये।

**आपीतसलिलः** – आपीतं सलिलं येन सः, पानी पीने पर।

**अपगतश्रमः** – अपगतः श्रमः यस्य सः, श्रम समाप्त होने पर।

**अभिमतम्** – अभि + मन् + क्त, स्वीकृतम्, प्रिय, इच्छित।

**अन्तरिते** – चले जाने पर।

**आरुरुक्षुः** – आ + रुह् + सन् + उ प्रत्यय, चढ़ने की इच्छा से।

**उत्क्रान्तम्** – उत् + क्रम् + क्त, निकल गये।

**असुभिः** – प्राणैः, प्राणों से।

**जरच्छबरः** – जरत् चासौ शबरः च भिल्लः, कर्मधारय, बूढ़ा भील।

**अपगतासुम्** – अपगताः असवः यस्य सः तम् बहुव्रीहि, प्राणहीन, मृत।

**अश्रुजलप्लुताम्** – अश्रूणां जलैः प्लुताम्, तत्पुरुष, आँसू के जल से भीगी हुई।

**संचरमाणः** – सम् + चर् + शानच्, संचार करता हुआ, चलता हुआ।

**प्रवेशितशिरोधरः** – प्रवेशिता स्थापिता शिरोधरा ग्रीवा येन सः, बहुव्रीहि, गर्दन को छिपाने वाला।

**निभृतम्** – नि + भृ + क्त, निश्चल।

**नृशंसः** – नरं शंसति हिनस्ति इति, क्रूर।

**अभिभूयमानः** – अभि + भू + शानच्, प्रभावित होता हुआ, आक्रान्त होता हुआ।

**अजातपक्षतया** – पंख उत्पन्न न होने से।

**अभिमततरम्** – अभि, मन् + क्त + तरप्, प्रियतर, अभीष्टतर।

**जिजीविषामि** – जीव् + सन् लट्, उ० पु०, ए०व०, जीना चाहता हूँ।

**आतपसन्तप्तपांसुला** – आतपेन घर्मेण सन्तप्ता पांसुला च धूलिः, तत्पुरुष + कर्मधारय समास, धूप से तपी धूल वाली।

**सिस्नासुः** – स्ना + सन् + उ, स्नातुमिच्छुः, नहाने की इच्छा रखने वाला।

**मुनिकुमारकदम्बकेन** – मुनीनां कुमाराणां कदम्बकेन वर्गेण, तत्पुरुष समास, मुनिकुमारों के समूह से।

**अनुगम्यमानः** – अनु + गम् + कर्मवाच्य + शानच् पु० प्र० ए० व०, पीछा किया जाता हुआ।

## अभ्यासः

1. **निम्नलिखितप्रश्नानां उत्तरम् संस्कृतेन लिखत**
   (क) पम्पाभिधानं पद्मसरः कुत्रासीत्?
   (ख) शुकः क्व निवसति स्म?
   (ग) शबराणां कीदृशं जीवनं वर्तते?
   (घ) हारीतः कस्य सुतः आसीत्?
   (ङ) जीवनाशा किं करोति?
   (च) शुकस्य पिता कीदृशानि फलशकलानि तस्मै अदात्?
   (छ) मृगयाध्वनिमाकर्ण्य शुकः कुत्र अविशत्?
   (ज) शबरसेनापतिः कस्मिन् वयसि वर्त्तमानः आसीत्?
   (झ) केषां किम् दुष्करम्?
   (ञ) कः शुकस्य तातम् अपगतासुमकरोत्?

2. **पाठमाधृत्य बाणभट्टस्य गद्यशैल्याः विशेषताः लिखत**

3. **मातृभाषया शबरसेनापतेः चरित्रम् लिखत**

4. **अधोलिखितानां भावार्थं लिखत**
   (क) किमिव हि दुष्करमकरुणानाम्।
   (ख) नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम्।
   (ग) सर्वथा न कञ्चिन्न खलीकरोति जीवनाशा।
   (घ) प्रायेण अकारणमित्राण्यतिकरुणार्द्राणि च भवन्ति सतां चेतांसि।

5. **शुकशावकस्य आत्मकथां संक्षेपेण लिखत**

6. **अधोलिखितेषु शब्देषु प्रकृतिप्रत्ययविभागं कुरुत**
   समाहृत्य, आकर्ण्य, निष्क्रम्य, विक्षिपन्, उपरतम्, गृहीत्वा, अभिलाषः, संचरमाणः।

7. **रिक्तस्थानानि पूरयत**
   (क) अस्ति भुवो मेखलेव ........................ नाम।
   (ख) ममैव जायमानस्य ........................ मे जननी मृता।
   (ग) अहो मोहप्रायम् ........................ जीवितम्।
   (घ) तातः ........................ मद्रक्षणे आकुलः अभवत्।
   (ङ) सर्वथा न ........................ न खलीकरोति जीवनाश।

**8. सन्धिविच्छेदं कुरुत**

तस्यैवैकस्मिन्, तातस्तु, प्रत्यूषसि, अचिराच्च, चिन्तयत्येव, फलानीव, तावदहम्, तेनैव, चादाय।

## योग्यताविस्तारः

**पम्पा :-** पम्पाभिधानं प्रसिद्धं सरः यद् अद्यत्वे पेन्नसिर इति नाम्नाभिधीयते। सरसः समीप एव ऋष्यमूकपर्वतो वर्तते पम्पा इति नदी अस्माद् एव सरसः निर्गता।

**विन्ध्याटवी :-** एका पर्वतश्रेणी या उत्तरभारतं दक्षिणभारतात् विभजति। सप्तकुलपर्वतेषु इयं परिगण्यते। इयं पर्वतमाला मध्यदेशस्य दक्षिणसीम्नि वर्तते।

**हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥** (*मनुस्मृतिः 2/21*)

एतासु पर्वतमालासु गहनानि वनानि सन्ति यानि 'विन्ध्याटवी' इति पदेनाभिधीयन्ते।

**किमिव हि दुष्करमकरुणानाम्**-इति अस्मिन् पाठे सूक्तिः। एतादृश्यः अन्याः सूक्तयोऽन्वेष्टव्याः।